# अंक ८



# संस्कृत-पाठ-माला ।

( संस्कृत-भाषाका अध्ययन करनेका सुगम उपाय )

Vol. II

## अष्टम भाग



लेखक

पं. श्रीपाद दामोदर सातवळेकर

अध्यक्ष – स्वाध्यायमंडल, साहित्यवाचस्पति

सप्तम बार

संवत् २००७, शक १८७२, सन १९५१

# विभक्तियोंके रूप ।



इस पुस्तकमें विभक्तियोंके रूपोंपर विशेष बल दिया है। इस पुस्तकके अध्ययन करनेके समय इस विषयपर पाठक अधिक ध्यान देंगे तो उनके लिये आगेकी पाठविधि अति सुगम हो जायगी।

आशा है कि पाठक इस ओर विशेष ध्यान देंगे।



स्वाध्याय-मण्डल, किल्ला-पारडी (जि. सूरत)

लेखक
श्रीपाद दामोदर सातवळेकर

मुद्रक और प्रकाशक-व० श्री० सातवळेकर, बी. ए.,
भारत-मुद्रणालय, किल्ला पारडी ( जि० सूरत )

ॐ

# संस्कृत–पाठ–माला।

## अष्टम भाग

### पाठ १

अ–कारान्त पुंल्लिंग शब्दोंके रूप पाठक जानते ही हैं, तथापि फिरसे स्मरण दिलानेके लिये यहां पुनः दिये जाते हैं–

जनः ( मनुष्य )

( १ ) जनः, जनौ, जनाः। ( सं० ) हे जन, हे जनौ, हे जनाः। ( २ ) जनं, जनौ, जनान्। ( ३ ) जनेन, जनाभ्यां, जनैः। ( ४ ) जनाय, जनाभ्यां, जनेभ्यः। (५) जनात्, जनाभ्यां, जनेभ्यः। (६) जनस्य, जनयोः, जनानां (७) जने, जनयोः, जनेषु॥

रामः।

( १ ) रामः, रामौ, रामाः। ( सं० ) हे राम, हे रामौ, हे रामाः। (२) रामं, रामौ, रामान्। ( ३ ) रामेण, रामाभ्यां, रामैः। ( ४ ) रामाय, रामाभ्यां रामेभ्यः। ( ५ ) रामात्, रामाभ्यां, रामेभ्यः।

( ६ ) रामस्य, रामयोः, रामाणां । ( ७ ) रामे, रामयोः, रामेषु ॥

पाठक इन दोनों शब्दोंके रूप देखें। इनके रूपोंमें थोडासा भेद है।

| | जनः | रामः |
| --- | --- | --- |
| तृतीया एकवचन- | जनेन | रामेण |
| षष्ठी बहुवचन- | जनानां | रामाणां |

यहां ' जन ' शब्दके रूपमें प्रत्ययका जो ' न ' है वह ' राम ' शब्दके रूपमें जाकर ' ण ' में बदल गया है। इसका नियम यह है—

१८ नियम

' र अथवा ष ' के पीछे आनेवाले ' न ' कारको ' ण ' होता है, और इनके बीचमें स्वर, क वर्ग, ह य व र के आनेपर भी ' न ' को ' ण ' होता है। देखिये—

'राम' शब्द ' र्+आ+म्+अ ' इतने वर्णोंसे बना है। इसके सामने तृतीयाका ' इन ' प्रत्यय आगया तो = [ राम +इन ] = हो कर—

र्+[ आ+म्+अ+इ ] + न = रामेण

ऐसी स्थिति होती है, अर्थात् ' र ' और ' न ' के बीचमें ' आ + म् + अ + इ ' इतने वर्ण आनेपर भी उक्त नियमके अनुसार ' न ' का ' ण ' होता है।

इसी प्रकार 'रामाणों' के स्थानपर भी इसी नियमसे न-कारका णकार होता है। ऐसे ही अन्यत्र समझना चाहिये।

' जनेन, जनानां ' इन रूपोंमें ' र अथवा ष ' नहीं है, अतः यहां नकारको ण नहीं होता।

शब्द

| | |
|---|---|
| पटः- वस्त्र | ज्वरः- ज्वर |
| पाकः- पका हुआ अन्न | भृत्यः-- नौकर |
| दीपः-- दिया | बुधः- ज्ञानी |
| योधः-- वीर | कपोतः-- कबूतर |
| तरगः--लहर | आश्रमः-- आश्रम |
| आतपः-- धूप | पायसः-- पायस, खीर |
| ग्रंथः-- पुस्तक | वायसः- कौआ |
| पार्थिवः-- राजा | वैद्यः-- वैद्य |

संस्कृत-वाक्यानि।

हे मित्र! तं पटं अत्र आनय। सः पटः कस्य अस्ति? केन तत्र स्थापितः? केन सः कृतः?

इदानीं भोजनस्य समयः जातः। किं पाकः सिद्धः न वा? यदि पाकः सिद्धः अस्ति, तर्हि इदानीं एव भोजनाय अहं आगन्तुं इच्छामि।

अस्मिन् स्थाने दीपः नास्ति। त्वया अत्र दीपः किं न स्थापितः? शीघ्रं त्वं तत्र गच्छ दीपं च अत्र

आनय । सः मनुष्यः ज्वरेण पीडितः अस्ति । इदानीं तस्य शरीरे अतीव ज्वरः अस्ति । अतः एतत् औषधं तस्मै देहि । अधुना एव देहि ।

तव भृत्यः इदानीं अत्र नास्ति किम् ? तेन ह्यः किं कृतम् ? येन कुपितः असि ।

बुधः सदा योग्यं वचनं एव उपदिशति । कदा अपि अयोग्यं भाषणं न वदति । अतः बुधस्य एव मित्रता संपादनीया ।

यथा योधः संग्रामं इच्छति तथा त्वं अपि इच्छसि किम् ? योधे धैर्यं भवति । शौर्यं अपि तत्रैव भवति ।

बुधः इदानीं शोभनं ग्रंथं लिखति । तस्य ग्रंथस्य पठनं कः करिष्यति ?

यदि तव गृहे पायसः अस्ति तर्हि मह्यं देहि । अहं पातुं इच्छामि ।

वायसः कठोरं शब्दं करोति, न तथा कोकिलः । कोकिलः मधुरं शब्दं करोति ।

मम आश्रमे उत्तमः कोकिलः अस्ति । सः प्रतिदिनं मधुरं गायनं करोति । सायंकाले तस्य मधुरं शब्दं श्रुत्वा मम हृदयं सन्तोषं प्राप्नोति ।

---

## पाठ २

अब निम्नलिखित शब्द कंठस्थ कीजिये—

अकारान्त पुल्लिंग शब्द ।

| | |
|---|---|
| शब्दः = शब्द | दुर्जनः = दुष्ट मनुष्य |
| द्वेषः = द्वेष, शत्रुता | पाठः = पाठ |
| प्रयत्नः = यत्न | होमः = यज्ञ, हवन |
| वर्णः = रंग, वर्ण | यज्ञः = „ „ |
| आर्यः = आर्य | आश्रमः = आश्रम |
| बुधः = ज्ञानी | यागः = यज्ञ |
| अध्यापकः = गुरु | धीरः = धैर्यवान् |
| दमः = इंद्रियदमन | आचार्यः = आचार्य |
| शमः = मनका शमन | उपवासः = उपवास |
| | जयः = विजय |

अकारान्त पुल्लिंग नामोंके समान ही इनके रूप होते हैं। पाठक इनके रूप बनाकर अनेक वाक्य बना सकते हैं—

संस्कृत-वाक्यानि ।

१ यथा गर्दभस्य शब्दः तथा एव उष्ट्रस्य रूपम् । २ उष्ट्रस्य विवाहे गर्दभः गायकः भवति ।

भाषा-वाक्य

१ जैसा गधेका शब्द वैसा ही ऊंटका रूप । २ ऊंटके विवाहमें गधा गायक होता है।

संस्कृत–वाक्यानि ।

३ गर्दभस्य विवाहे उष्ट्रः नर्तकः भवितुं अर्हति । ४ शब्दे नित्यः अर्थः विद्यते । ५ यथा मूषकस्य मार्जारेण सह स्वाभाविकः द्वेषः अस्ति तथैव सिंहस्य गजेन सह वैरं अस्ति । ६ प्रयत्नेन सर्वं सिद्धं भवति । ७ यत्ने कृते यदि न सिध्यति तत्र कः दोषः ? ८ आर्यः सर्वदा प्रयत्नं करोति । ९ तव कः वर्णः ? तस्य किं कर्तव्यं ? १० बुधः सर्वं जानाति न तथा मूढः । ११ दुर्जनं प्रथमं वंदेत् सज्जनं तदनंतरम् । १२ अद्य तव अध्यापकेन कः पाठः पाठितः ?

भाषा–वाक्य

३ गधेकी शादीमें ऊंट नाचनेवाला होनेयोग्य है । ४ शब्दमें नित्य अर्थ होता है । ५ जैसा चूहेका बिल्लीके साथ स्वाभाविक द्वेष है उसी प्रकार सिंहका हाथीके साथ वैर है । ६ यत्नसे सब सिद्ध होता है । ७ यत्न करनेपर यदि सिद्धी न हुई तो उसमें क्या दोष है ? ८ आर्य सदा प्रयत्न करता है । ९ तेरा वर्ण क्या है ? उसका क्या कर्तव्य है ? १० ज्ञानी सब जानता है, वैसा मूढ नहीं ( जानता है ) । ११ दुष्ट मनुष्यको प्रथम वंदन करे तत्पश्चात् सज्जनको । १२ आज तेरे अध्यापकने कौनसा पाठ पढाया है ?

संस्कृत-वाक्यानि ।

१३ ब्राह्मणः यज्ञं करोति । १४ धीरः आचार्यः यथा उपदिशति तथा एव स्वय आचरति । १५ शिष्यः नमस्कृत्य, आचार्यात् विद्यां गृह्णाति । १६ आचार्येण सह शिष्यः वनं गत्वा तत्र पठति ।

भाषा वाक्य

१३ ब्राह्मण यज्ञ करता है । १४ धैर्यशाली आचार्य जैसा उपदेश देता है वैसा ही स्वय आचरण करता है । १५ शिष्य नमस्कार करके आचार्यसे विद्या ग्रहण करता है । १६ आचार्यके साथ शिष्य वनमे जाकर वहा पढता है ।

संस्कृत-वाक्यानि ।

प्राणेन एव शरीरे बलं भवति । अन्नं अपि शरीरस्य बल वर्धयति । तृषाशमनार्थं जलस्य पान अवश्यं कर्तव्यम् । प्राणायामेन प्राणस्य वर्धनं भवति । ध्यानेन मनःशक्तिसंवर्धनं भवति ।

रावणस्य राज्य लंकायां आसीत् । तस्य रावणस्य हननं रामेण कृतम् । लंकाराज्ये राक्षसानां आसीत् । दुर्गं आश्रित्य राक्षसः युद्धं कर्तुं न शक्तः ।

वृक्षस्य पत्र पुष्पं फल च सर्वं उत्तम अस्ति । पुष्पस्य उत्तमः गन्धः, फलस्य शोभनः रसः, पत्रस्य च वर्णः आनन्दकरः भवति ।

कारण इसमें र अथवा ष अक्षरका न होना है।

अस्तु। अब इकारान्त पुल्लिंग शब्द पढिये—

शब्द।

| | |
|---|---|
| पाणिः = हाथ | रश्मिः = किरण |
| मुष्टिः = मुक्का | कविः = कवि |
| मणिः = मणि | नृपतिः = राजा |
| रविः = सूर्य | भूपतिः = ,, |
| उदधिः = समुद्र | ग्रंथिः = ग्रंथि |
| इषुधिः = बाणोंका कोश | कपिः = बंदर |
| ऋषिः = ऋषि | दुंदुभिः = ढोल |
| मुनिः = मुनि | प्रजापतिः = प्रजापति |

संस्कृत-वाक्यानि।

त्वं एकेन पाणिना इदानीं किं करोषि ? अहं पाणिभ्यां वस्त्रं आनयामि। सः पाणौ धनं गृह्णाति। इदानीं मम पाणिः मलिनः अस्ति। सः मुष्टिना युद्धं करोति। त्वं मुष्टियुद्धं जानासि किम् ? तेन सः मुष्टिभिः ताडितः। पुरुषेण मुष्टियुद्धं अवश्यं कर्तव्यम्। अहं मणिं कंठे धारयामि। सः मणीनां मालां पुत्रस्य कंठे स्थापयति। यदा मणिषु सूत्रं प्रविष्टं भवति तदा तेषां माला भवति। रविः प्रातःसमये आगच्छति। सः तस्य

उदयः इति उच्यते। सः सूर्यः सायंकाले अस्तं गच्छति। सायंकालानंतरं रात्रिः भवति। रात्रिसमये अंधकारः भवति। प्रकाशस्य अभावः एव अंधकारः। त्वया उदधिः दृष्टः न वा? मया उदधिः दृष्टः। यदा अहं मुंबापुरीप्रदेशे गतः तदा तत्र उदधिः मया दृष्टः। उदधेः जलं क्षारं भवति। उदधिजलात् एव लवणं प्राप्नोति। यदा उदधेः जलं सूर्यस्य रश्मिभिः शुष्यति तदा लवणं भवति। इषुधौ बाणाः भवन्ति। वीरः इषुधेः बाणं गृह्णाति।

ऋषिः आश्रमे स्थित्वा किं करोति? सः स्वशिष्यान् किं उपदिशति? स वेदमन्त्रान् उपदिशति। शिष्याः वेदमंत्रान् पठन्ति। तेषां मननं च कुर्वन्ति। यः मननं करोति सः एव मनुष्यः भवति। मुनिः मौनं साधयति। मननाय मौनं एव आवश्यकं अस्ति। सूर्यस्य रश्मिः अद्य शोभनः अस्ति। यदा मेघाः भवन्ति तदा एव सूर्यस्य रश्मिः न भवति। नृपतिः नरान् पालयति। भूपतिः भूमिं रक्षति। प्रजापतिः प्रजानां पालन करोति। कपिः वृक्षे भवति। यदा सः ग्रामं आगच्छति तदा कुमाराः तं दण्डैः ताडयन्ति।

त्वया दुंदुभेः शब्दः श्रुतः न वा? इदानीं दुंदुभेः महान् शब्दः भवति।

## पाठ ४

इस पाठमें आप निम्नलिखित शब्द स्मरण कीजिये—

| | |
|---|---|
| पठितुं = पढनेके लिये | मह्यं = मेरे लिये |
| पुनः = फिर | तुभ्यं = तेरे लिये |
| विमानः = विमान | वस्त्रकारः = जुलाहा |
| काष्ठं = लकडी | रथकारः = तखाण |
| निर्माणं = बनावट | कुंभकारः = कुम्हार |
| मृत्तिका = मिट्टी | सुवर्णकारः = सुनार |
| सुवर्णं = सोना | लोहकारः = लुहार |
| माला = माला | मालाकारः = माली |
| रथांगं = रथके भाग | लेखकः = लिखनेवाला |
| श्रोता = सुननेवाला | याजकः = यज्ञकर्ता |
| पूजकः = पूजा करनेवाला | शिक्षकः = अध्यापक |
| विचारणा = विचार | धारयित्वा = धारण करके |
| मननं = मनन | योगाचारः=योगका आचार |
| मनोबलं = मनका बल | यशोवर्धकः = यश बढाने वाला |
| कंदुकः = गेंद | अनध्यायः = छुट्टी |

इन शब्दोंको कंठस्थ करनेसे पाठक निम्नलिखित वाक्य विना आयास समझ सकते हैं—

## वाचनपाठः ।

हे मित्र ! तव पुस्तकं अहं पठितुं इच्छामि । कुत्र अस्ति तव पुस्तकं ? यदि त्वं अधुना तत् न पठसि तर्हि मह्यं देहि । अहं तत् श्वः वा परश्वः वा तुभ्यं पुनः दास्यामि । रामः रथेन अन्यं ग्रामं गच्छति । विष्णुमित्रः जलरथेन अन्यं देशं गन्तुं इच्छति । गोपालः आकाशरथेन विमानेन अन्यं प्रदेशं गच्छति ।

वस्त्रकारः सूत्रेण वस्त्रं करोति । रथकारः काष्ठात् रथस्य निर्माणं करोति । कुम्भकारः मृत्तिकापात्रं करोति । सुवर्णकारः सुवर्णस्य आभूषणं करोति । मालाकारः पुष्पाणां मालाः करोति । लोहकारः लोहस्य रथांगानि करोति । लेखकः पुस्तकं लिखति ।

पाठकः लेखं पुस्तकं च पठति । उपदेशकः धर्मस्य उपदेशं करोति । श्रोता तस्य श्रवणं मननं च करोति । याजकः यजनं करोति । पूजकः पूजां करोति । शिक्षकः शिष्यं पाठयति । योधः युद्धं करोति । सैनिकः शस्त्रं गृहीत्वा धावति । वीरः अश्वं आरोहति । राजा सैनिकान् प्रेरयति । मंत्रिः युद्धस्य विचारणां करोति ।

ऋषिः वने आश्रमस्थाने तपः तपति । मुनिः मौनं धारयित्वा मननं करोति । योगी योगाचारं आश्रित्य स्वकीयं मनोबलं वर्धयति ।

ये मनुष्याः भिन्नाः वर्तन्ते तेषां योगक्षेमं नैव कल्पते। भिन्नानां मनुष्याणां विनाशः एव शीघ्रं भवति। तेषां कः अपि तरणोपायः नैव अस्ति।

कुलस्य यशोवर्धनाय सदाचारसंपन्नः पुत्रः आवश्यकः अस्ति। एकः अपि सत्पुत्रः यशोवर्धकः भवति। अहं अद्य सायंकाले तव गृहं प्रति आगमिष्यामि। त्वं तदा तत्र भविष्यसि किम्? यदि त्वं तत्रैव स्थास्यसि तर्हि अहं आगमिष्यामि नोचेत् नैव आगमिष्यामि।

अस्मिन् गृहे एकः बालकः दुग्धं पिबति। अन्यः पुत्रः जलं पिबति। तत्र वृद्धमनुष्यः फलस्य रसं पिबति। कश्चित् तरुणः पुरुषः मोदकं भक्षयति।

अत्र बालः कंदुकेन क्रीडति। सः तत्र जले क्रीडति। अन्यः कश्चित् पुरुषः शीघ्रं धावति।

इदानीं तस्मिन् कूपे किञ्चित् अपि जलं नास्ति, परंतु अस्मिन् तडागे शोभनं सलिलं अस्ति। अत्र गुरुः इदानीं पर्यन्तं न आगतः तथा च शिष्यः अपि न आगतः। अद्य इदानीं कः अपि नैव आगमिष्यति। अद्य अनध्यायः अस्ति। पश्य तस्य वीरस्य पराक्रमं। सः शस्त्रस्य उपयोगं कर्तुं जानाति।

पाठक ये वाक्य वारंवार पढें और इनका अच्छा अभ्यास करें।

# पाठ ५

## संस्कृत–वाक्यानि।

१ सुमंत्रः गत्वा रामं ददर्श। ववन्दे च तं। उवाच च। २ हे राम ! पिता त्वां द्रष्टुं इच्छति। राज्ञी कैकेयी अपि त्वां द्रष्टुं इच्छति। गम्यतां तत्र। मा चिरं इति। ३ एव उक्तः नरसिंहः रामः सीतां संमान्य अन्तःपुरं अभ्यगात्। अभिवाद्य च पितुः चरणौ सुसमाहितः कैकेय्या अपि चरणौ ववन्दे। ४ नृपतिः तु दीनः न शशाक ईक्षितुं, किं पुनः अभिभाषितुम् ? तव नरपतेः रूपं भयावहं दृष्ट्वा भयं आपन्नः रामः।

## भाषा–वाक्य

१ सुमंत्रने जाकर रामको देखा। नमस्कार किया उसको। और बोला। २ हे राम ! पिता तुझे देखनेकी इच्छा करता है। रानी कैकेयी भी तुझे देखना चाहती है। जाओ वहां। देर न हो। ३ इस प्रकार कहा हुआ नरश्रेष्ठ राम सीताका संमान करके अन्तःपुरमें गया। पिताके चरणोंको नमस्कार करके उसने सावधान होकर कैकेयीके चरणोंको भी वंदना की। ४ राजा तो दीन होकर देखनेके लिये भी समर्थ न हुआ, तो क्या फिर बोलनेके लिये ? उस राजाके भयानक रूपको देखकर राम भयको प्राप्त हुआ।

## संस्कृत-वाक्यानि ।

५ कैकेयीं अभिवाद्य एव अब्रवीत्-कच्चित् मया न अपराद्धं येन मे कुपितः पिता ? कच्चित् न भरते शत्रुघ्ने मातृणां वा मे अशुभम् ? ६ नृपे तु कुपिते मुहूर्तमपि जीवितुं न उत्सहे । ७ कैकेयी तु निर्लज्जा तदा आत्महितं वचः उवाच । राम ! राजा न कुपितः । न अस्य किंचन व्यसनं । मनोगतं तु किंचित् त्वद्भयात् न अनुभाषते । ८ त्वां अप्रियं वक्तुं न प्रवर्तते अस्य वाणी । एष हि पुरा मां अभिपूज्य वरं च दत्त्वा पश्चात् तप्यते राजा, यथा अन्यः प्राकृतः ।

### भाषा-वाक्य

५ कैकेयीको अभिवादन करके ही बोला कि क्या मैंने तो कोई अपराध नहीं किया जिससे मेरा पिता क्रोधित हुआ ? भरत, शत्रुघ्न वा माताओंके विषयमें मैंने कोई अशुभ तो नहीं किया होगा ? ६ राजाके क्रोधित होनेपर घडीभर भी जीनेको मैं उत्साहित नहीं हूं । ७ निर्लज्ज कैकेयी तब अपने हितका भाषण बोली । हे राम ! राजा क्रोधित नहीं है । नहीं इसको कोई कष्ट है । मनके कुछ विचार तेरे भयके कारण नहीं बोलता है । ८ तेरे लिये अप्रिय बोलनेको इसकी वाणी प्रवृत्त नहीं होती । यह तो पहिले मुझे पूजकर और वर देकर पश्चात् संतप्त हो रहा है राजा, जैसा ( अन्यः प्राकृतः ) साधारण मनुष्य होता है ।

## संस्कृत-वाक्यानि ।

९ एतत् श्रुत्वा रामः व्यथितः उवाच । अहो धिक् । हे देवि ! मां एवं वक्तुं न अर्हसि । राज्ञः वचनात् पावके अपि पतेयम् । तत् राज्ञः यत् अभिकांक्षितं तत् ब्रूहि १० रामः द्विः न अभिभाषते । ११ ततः कैकेयी तं दारुणं वचः उवाच । १२ हे राम ! ते पित्रा मे वरौ दत्तौ । तत्र मे याचितः अधुना राजा, भरतस्य अभिषेचनं तव च अद्य एव दंडकारण्ये गमनं । यदि पितरं आत्मानं च सत्यप्रतिज्ञं कर्तुं इच्छसि, तत् पितुः सन्निदेशे तिष्ठ।

### भाषा-वाक्य ।

९ यह सुनकर राम दुःखी होकर बोला । अहो धिक्कार है । हे देवि ! मुझे ऐसा बोलनेके लिये तू योग्य नहीं है । राजाके वचनसे अग्निमें भी गिरूंगा । इसलिये राजाका जो इष्ट है वह बोल । १० राम दो बार नहीं बोलता है । ११ तब कैकेयी उससे कठोर वचन बोली । १२ हे राम ! तेरे पिताने मुझे दो वर दिये थे । उसमें मैंने अब राजाकी याचना की कि भरतका राज्याभिषेक और तेरा आज ही दंडकारण्यमें गमन हो । यदि पिताको और अपनेको सत्यप्रतिज्ञ करनेकी इच्छा है, तो पिताकी आज्ञामें रह ।

### संस्कृत-वाक्यानि

१३ नव पञ्च च वर्षाणि त्वया अरण्यं प्रवेष्टव्यम् । त्यक्त्वा अभिषेकं जटाचीरधारी भव । भरतः तु इमां पृथिवीं प्रशास्तु । १४ मरणोपमं वचनं श्रुत्वा रामः न विव्यथे । कैकेयीं च अब्रवीत् ।

### भाषा-वाक्य ।

१३ नौ और पांच वर्ष तूने वनमें प्रवेश करना । राज्याभिषेक छोडकर जटावल्कल धारण करनेवाला हो । भरत इस पृथिवीका शासन करे । १४ मरणके समान वचन सुनकर रामको दुःख न हुआ । और कैकेयीसे बोला ।

पाठक इन वाक्योंका उत्तम अभ्यास करें । संस्कृत वाक्यमें शब्द आगेपीछे होते हैं । उनका अर्थ पूर्वापर संबंधसे देखें और समझनेका यत्न करें ।

### संधि किये हुए वाक्य ।

नव च पञ्च वर्षाण्यरण्यं त्वया प्रवेष्टव्यम् । प्रवेष्टव्यमरण्यं त्वया नव पञ्च च वर्षाणि । त्वयाऽरण्यं प्रवेष्टव्यं नव पञ्च च वर्षाणि ।

त्यक्त्वाऽभिषेकं जटाचीरधारी भव । भव जटाचीरधार्यभिषेकं त्यक्त्वा । भरतस्त्विमां पृथिवीं प्रशास्तु । प्रशास्त्विमां पृथिवीं भरतः ।

## पाठ ६

इस पाठमें उकारांत पुंल्लिंग शब्दोंके रूप बताये जाते हैं-

सूनुः ( पुत्र, लडका )

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| १ | सूनुः | सूनू | सूनवः |
| सं० हे | सूनो | हे ,, | ,, |
| २ | सूनुं | ,, | सूनून् |
| ३ | सूनुना | सूनुभ्यां | सूनुभिः |
| ४ | सूनवे | ,, | सूनुभ्यः |
| ५ | सूनोः | ,, | ,, |
| ६ | ,, | सून्वोः | सूनूनां |
| ७ | सूनौ | ,, | सूनुषु |

इस रीतिसे उकारान्त पुल्लिंग शब्दोंके रूप बनाये जाते हैं

गुरुः ( अध्यापक )

(१) गुरुः, गुरू, गुरवः । ( सं. ) हे गुरो, हे गुरू, हे गुरवः । (२) गुरुं, गुरू, गुरून् । (३) गुरुणा, गुरुभ्यां, गुरुभिः । (४) गुरवे, गुरुभ्यां, गुरुभ्यः । (५) गरोः, गुरु ः, गुरुभ्यः । (६) गुरोः, गुर्वोः, गुरूणां । (७) गुरौ, गुर्वोः, गुरुषु ॥

इस 'गुरु' शब्दके रूपोंमें "गुरुणा" और "गुरूणां" में तृतीय पाठमें उक्त नियमसे ही न के स्थानपर ण हुआ है ।

उकारान्त पुंल्लिंग शब्द—

| | |
|---|---|
| मृत्युः = मृत्यु | ऋतुः = दो मासकी अवधि |
| गुरुः = अध्यापक | क्रतुः = यज्ञ |
| इक्षुः = ईख | साधुः = साधु |
| मेरुः = मेरु पर्वत | तन्तुः = धागा |
| वायुः = वायु (वाति) | इषुः = बाण |
| सेतुः = पुल | स्तनयित्नुः = मेघ |
| प्रभुः = स्वामी | बाहुः = बाहु |
| भिक्षुः = भिक्षु | पशुः = पशु |
| शिशुः = बालक | जन्तुः = प्राणी |

संस्कृत-वाक्यानि ।

यदा गुरुः पाठशालां आगच्छति तदा पठनं भवति। यथा गुरुः वदति, तथा एव त्वं पठ । मृत्युः सर्वस्य ईशः अस्ति । मृत्युना सर्वं व्याप्तम् । मृत्यवे त्वं किं दास्यसि ? मृत्योः आत्मनं रक्ष । इक्षोः रसः अतिमधुरः भवति । इक्षुरसात् एव गुडः भवति । इक्षुं भक्षय इदानीम् । स भृत्यान् इक्षुभिः ताडयति । इक्षूणां रसं तस्मिन् भाण्डे स्थापय । मेरुः नामकः एकः पर्वतः अस्ति । उत्तरदेशे मेरोः स्थानं अस्ति । मेरौ देवानां एका सभा आसीत् । इदानीं वायुः वाति । यथा इदानीं वायुः वाति तथा रात्रौ न वाति तेन अतीव कष्टं भवति।

वायुना एव सर्वे जन्तवः जीवन्ति। वायौ एव प्राणः अस्ति। सेतुं कृत्वा नदीपारं गच्छ। यत्र सेतवः भवन्ति, तत्र सुखेन मनुष्याः गन्तुं समर्थाः भवन्ति।

ईश्वरः सर्वस्य प्रभुः अस्ति। राजा राष्ट्रस्य प्रभुः भवति। एषः सज्जनः अस्य ग्रामस्य प्रभुः अस्ति। प्रभुणा मह्यं धनं दत्तम्। त्वं प्रभवे किं दास्यसि? अहं प्रभोः चरणौ वंदे। प्रभुं एव शरणं गच्छ। भिक्षुः ग्रामात् ग्रामं भ्रमति। धर्मस्य प्रचाराय एव स नगरात् नगरं अटति। भिक्षवे अन्नं वस्त्रं च देहि। तत्र मम शिशुः क्रीडति। तं शिशुं पश्य। तेन शिशुना पात्रं तत्र एव स्थापितम्। शिशवे दुग्धं देहि। एषः वसंतः ऋतुः अस्ति। द्वितीये ग्रीष्मे ऋतौ त्वं कुत्र गमिष्यसि?

पाठक इस प्रकार पूर्वोक्त शब्दोंके रूप बनाकर वाक्य बनावें और वाक्य बनानेका अभ्यास बढावें। इस पाठमें आये हुए कुछ शब्दोंका अर्थ इस प्रकार है—

| | |
|---|---|
| व्याप्तं = व्यापक | वाति = चलता है। |
| आत्मानं = अपनेको | अतीव = अत्यंत |
| गुडः = गुड | जीवति = जीवित रहता है |
| ताडयति = पीटता है | पारं = पार |
| भांडं = पात्र, बर्तन | वंदे = वंदन करता हूं |
| आसीत् = थी, था | राष्ट्रं = देश |

## संस्कृत-वाक्यानि।

८ कशया हतः वाजी इव रामः अपि वनं गन्तुं कृतत्वरः बभूव। सः राजानं उत्थाप्य उवाच। ९ देवि! न अहं अर्थपरः। मां धर्मे आस्थितं विद्धि। पितृशुश्रूषायाः महत्तरं किंचित् धर्माचरणं नास्ति। १० भवतु! मातरं आपृच्छे तावत्। सीतां च अनुनयामि। ततः अद्य एव महत् वनं गमिष्यामि। ११ भवत्या तथा कर्तव्यं यथा भरतः राज्यं पालयेत् पितरं च शुश्रूषेत्, नः सः एव हि धर्मः।

## भाषा-वाक्य।

८ चाबुकसे ताडित घोडेके समान राम भी वनको जानेके लिये शीघ्रता करने लगा। वह राजाको उठाकर बोला। ९ हे देवि! मैं धनका लोभी नहीं हूं। मैं धर्मपर स्थित हूं यह जान। पिताकी सेवा करनेसे अधिक बडा कोई धर्मका आचरण नहीं है। १० अस्तु। मातासे पूछता हूं। सीताको साथ ले जाऊंगा। तब आज ही बडे वनको जाऊंगा। ११ आपने वैसा करना जिससे भरत राज्यकी पालना करे और पिताकी शुश्रूषा करे, क्योंकि हमारा यही धर्म है।

संस्कृत-वाक्यानि ।

१२ विसंज्ञस्य अपि राज्ञः तथा कैकेय्याः अपि चरणौ रामः निष्पपात । निष्क्रम्य च अंतःपुरात् स्वं सुहृज्जनं च ददर्श । १३ क्रुद्धः लक्ष्मणः बाष्पपूरितलोचनः तं अनुजगाम १४ तदा माता कौसल्या तं आह– हे राम ! राजर्षीणां धर्मशीलानां कुलोचितं धर्मं कीर्तिं आयुः च प्राप्नुहि ।

भाषा-वाक्य ।

१२ मूर्छित पडे हुए भी राजाके तथा कैकेयीके चरणोंपर रामने नमन किया । निकलकर अन्तःपुरसे, अपने मित्रजनोंको देखा । १३ क्रुद्ध लक्ष्मण आँसुओंसे नेत्र भरकर उसके पीछे चला । १४ तब माता कौसल्या उसे बोली कि, हे राम ! राजर्षि वृद्ध धार्मिकोंके कुलके उचित धर्मको तथा कीर्ति और आयुको प्राप्त हो ।

पाठक इन वाक्योंका अच्छी प्रकार अभ्यास करें और संस्कृत वाक्योंका पाठ वारंवार करें। कमसे कम वीस पचीस वार इनका पाठ करें।

संधि किये हुए वाक्य

विसंज्ञस्यापि राज्ञस्तथा कैकेय्या अपि चरणौ रामो निष्पपात । निष्क्रम्य चान्तःपुरात्स्वं सुहृज्जनं च ददर्श ।

## पाठ ८

इस पाठमें ऋकारान्त पुल्लिंग शब्दोंके रूप बताते हैं—

कर्तृ ( करनेवाला, कर्ता )

| वि० | एक० | द्वि० | बहु० |
|---|---|---|---|
| १ | कर्ता | कर्तारौ | कर्तारः |
| सं० | हे कर्तः | हे ,, | हे ,, |
| २ | कर्तारं | ,, | कर्तॄन् |
| ३ | कर्त्रा | कर्तृभ्यां | कर्तृभिः |
| ४ | कर्त्रे | ,, | कर्तृभ्यः |
| ५ | कर्तुः | ,, | ,, |
| ६ | ,, | कर्त्रोः | कर्तॄणाम् |
| ७ | कर्तरि | ,, | कर्तृषु |

इसी प्रकार ऋकारान्त पुल्लिंग शब्दोंके रूप बनते हैं। ऋकारान्त शब्दोंमें रकार होनेके कारण इन शब्दोंके नकारको ण होता है, जैसा 'कर्तॄणां' षष्ठीका बहुवचन हुआ है। 'पितृ' शब्दके रूपोंमें थोड़ी भिन्नता है। देखिये उसके रूप-

| | | | |
|---|---|---|---|
| १ | पिता | पितरौ | पितरः |
| सं० | हे पितः | हे ,, | हे ,, |
| २ | पितरं | ,, | पितॄन् |
| ३ | पित्रा | पितृभ्यां | पितृभिः |

| | | | |
|---|---|---|---|
| ४ | पित्रे | पितृभ्यां | पितृभ्यः |
| ५ | पितुः | ,, | ,, |
| ६ | ,, | पित्रोः | पितॄणाम् |
| ७ | पितरि | ,, | पितृषु |

इसमें जो भिन्नता है, वह भी देखिये—

| | | | |
|---|---|---|---|
| प्रथमा | कर्ता | कर्तारौ | कर्तारः |
| ,, | पिता | पितरौ | पितरः |

यहां 'कर्तारौ' के समान 'पितारौ' नहीं हुआ 'कर्तारः' के समान 'पितारः' नहीं हुआ। यह भेद पाठक स्मरणमें रखें।

वक्तृ ( बोलनेवाला, वक्ता )

१) वक्ता, वक्तारौ, वक्तारः। ( सं. ) हे वक्तः, हे वक्तारौ, हे वक्तारः। (२) वक्तारं, वक्तारौ, वक्तॄन्। (३) वक्त्रा, वक्तृभ्यां, वक्तृभिः।(४) वक्त्रे, वक्तृभ्यां, वक्तृभ्यः। (५) वक्तुः, वक्तृभ्यां; वक्तृभ्यः। (६) वक्तुः वक्त्रोः, वक्तॄणां। (७) वक्तरि, वक्त्रोः, वक्तृषु।

इस प्रकार पाठक ऋकारान्त शब्दोंके रूप बना सकते हैं। पाठकोंकी सुविधाके लिये अब नीचे ऋकारान्त शब्द दिये जाते हैं, पूर्वोक्त प्रकारसे उनके रूप बनाकर पाठक वाक्य बनावें—

### शब्द ।

| | |
|---|---|
| कर्तृ = करनेवाला | स्रष्टृ = उत्पन्न करनेवाला |
| स्तोतृ = स्तुति करनेवाला | भर्तृ = भरण करनेवाला |
| धातृ = धारण करनेवाला | निर्मातृ=निर्माण करनेवाला |
| विधातृ = ,, ,, | + नृ = मनुष्य |
| वक्तृ = बोलनेवाला | +भ्रातृ = भाई |
| क्षत्तृ = सारथी | +जामातृ = दामाद |
| त्वष्टृ = तखाण | देवृ = देवर |

[ +इन शब्दोंके 'पितृ' शब्दके समान रूप होते हैं । ]

इन शब्दोंके रूप बनाकर पाठक पूर्ववत् वाक्य बनानेका यत्न करें ।

### संस्कृत-वाक्यानि ।

१ अस्य विश्वस्य कः कर्ता अस्ति ? २ जगत्स्रष्टारं अहं पूजयामि। ३ स्तोता इदानीं किं वदति ? ४ धात्रा इदं विश्वं रचितम् । ५ अस्य विश्वस्य ईश्वरः एव विधाता अस्ति । ६ तव जामाता कुत्र गतः ?

### भाषा-वाक्य ।

१ इस विश्वका कर्ता कौन है ? २ जगत्स्रष्टाकी मैं पूजा करता हूं । ३ स्तुति करनेवाला अब क्या बोलता है ? ४ धाताने यह विश्व रचा है । ५ इस विश्वका ईश्वर ही विधाता है । ६ तेरा दामाद कहाँ गया है ?

संस्कृत-वाक्यानि ।

७ त्वं जामात्रे किं दातुं इच्छसि ? ८ तव जामातुः गृहं अत्र नास्ति। ९ मम पञ्च भ्रातृभिः एतत् निर्मितम्। १० त्वष्टारं अत्र आनय। ११ क्षत्तारं तत्र इदानीं एव नय। १२ तव गृहस्य निर्माता इदानीं एव अत्र आगतः। १३ धातुः इच्छा बलीयसि।

भाषा-वाक्य

७ तू दामादके लिये क्या देना चाहता है ? ८ तेरे दामाद का घर यहां नहीं है। ९ मेरे पांच भाइयोंने यह निर्माण किया है। १० तर्खाणको यहां ला। ११ सारथीको वहां अभी ले जा। १२ तेरे घरका निर्माण करनेवाला अभी यहां आया था। १३ धाता ( ईश्वर ) की इच्छा बलवती है।

इस रीतिसे छोटे छोटे वाक्य बनानेका अभ्यास पाठकोंको करना चाहिये। सातों विभक्तियोंके रूप बनानेसे उनका वाक्योंमें प्रयोग करना सुगम हो जाता है। इसलिये इस पाठमें इन शब्दोंके रूप बनाना पाठक सीखें।

## पाठ ९

पूर्व पाठोंमें दिये हुए रामायणके वाक्य इस पाठमें संधि करके दिये जाते हैं। इनके पढनेसे संधियोंका ज्ञान पाठकों को हो सकता है।

सुमंत्रो गत्वा रामं ददर्श। ववन्दे च तमुवाच च। हे राम! पिता त्वां द्रष्टुमिच्छति। गम्यतां तत्र, मा चिरमिति। एवमुक्तो नरसिंहो रामः सीतां संमान्यान्तःपुरमभ्यगात्। अभिवाद्य च पितुश्चरणौ सुसमाहितः कैकेय्या अपि चरणौ ववन्दे। नृपतिस्तु दीनो न शशाकेक्षितुं किं पुनरभिभाषितुम्? तच्च नरपते रूपं भयावहं दृष्ट्वा भयमापन्नो रामः।

कैकेयीमभिवाद्यैवाब्रवीत्, कच्चिन्मया नापराद्धं येन मे कुपितः पिता? कच्चिन्न भरते शत्रुघ्ने मातॄणां वा मेऽशुभम्? नृपे तु कुपिते मुहूर्तमपि जीवितुं नोत्सहे।

कैकेयी तु निर्लज्जा तदाऽऽत्महितं वच उवाच। राम! राजा न कुपितः। नास्य किंचन व्यसनं, मनोगतं तु किंचित्त्वद्भयान्नानुभाषते। त्वामप्रियं वक्तुं न प्रवर्ततेऽस्य वाणी। एष हि पुरा मामभिपूज्य वरं च दत्त्वा पश्चात्तप्यते राजा यथाऽन्यः प्राकृतः।

एतच्छ्रुत्वा रामो व्यथित उवाच। अहो धिक्! हे देवि! मामेवं वक्तुं नार्हसि। राज्ञो वचनात्पाव-

केऽपि पतेयम् । तद्राज्ञो यदभिकांक्षितं तद् ब्रूहि । रामो द्विर्नाभिभाषते । ततः कैकेयी तं दारुणं वच उवाच । हे राम ! ते पित्रा मे वरौ दत्तौ । तत्र मे याचितोऽधुना राजा, भरतस्याभिषेचनं तव चाद्यैव दंडकारण्ये गमनम् । यदि पितरमात्मानं च सत्यप्रतिज्ञं कर्तुमिच्छसि तत्पितुः सन्निदेशे तिष्ठ । नव पंच च वर्षाणि त्वयाऽरण्यं प्रवेष्टव्यम् । त्यक्त्वाऽभिषेकं जटाचीरधारी भव । भरतस्त्विमां पृथिवीं प्रशास्तु । मरणोपमं वचः श्रुत्वा रामो न विव्यथे । कैकेयीं चाब्रवीत् ।

इस पाठको अनेक वार पाठक पढें । इससे संधिसहित संस्कृत पढने और समझनेका अभ्यास हो जायगा । अब इस पाठमें आये हुए समासोंका विवरण दिया जाता है । उसका अभ्यास पाठक ध्यानसे करें— .

समास ।

नरसिंहः = नराणां सिंहः ( मनुष्योंमें शेर )
सुसमाहितः = सुष्ठु समाहितः ( उत्तम शांत )
नृपतिः = नृणां पतिः ( मनुष्योंका पति )
नरपतिः = नराणां पतिः ( ,, ,, )
अशुभं = न शुभं ( जो शुभ नहीं )
मनोगतं = मनसि गतं ( मनमें गया हुआ )

त्वद्भयं = तव भयं ( तेरा भय )
अप्रियं = न प्रियं ( जो प्रिय नहीं )
सत्यप्रतिज्ञः = सत्या प्रतिज्ञा यस्य सः ( सत्य है प्रतिज्ञा जिसकी वह )

जटाचीरधारी=जटा च चीरं च जटाचीरे। जटाचीरे धारयतीति जटाचीरधारी। (जटा और वल्कल धारण करनेवाला)

मरणोपमं-मरणस्य उपमा यस्य तत्। ( मरणकी उपमा है जिसकी )

अब पाठकोंकी सुविधाके लिये कुछ संधियाँ यहां बताते हैं

सुमंत्रो गत्वा- सुमंत्रः गत्वा। चोवाच- च उवाच।
नरसिंहोरामः-नरसिंहः रामः। तद्ब्रूहि- तत् ब्रूहि।
पितुश्चरणौ- पितुः चरणौ।
कैकेय्या अपि- कैकेय्याः अपि।
शशाकेक्षितुं- शशाक ईक्षितुम्।
तच्च नरपते रूपं- तत् च नरपतेः रूपं।
नापराद्धं-न अपराद्धं। एतच्छ्रुत्वा- एतत् श्रुत्वा।
किंचित्त्वद्भयान्नानुभाषते— किंचित् त्वत्-भयात् न अनुभाषते।

पाठक इस ढंगसे संधियोंका विचार करें। वारंवार इन संधियोंको देखनेसे ही इनका परिचय हो जायगा और एक वार इनका परिचय हुआ तो फिर कोई भी कठिनता नहीं रहेगी।

## पाठ १०

इस समयतक पाठक पुल्लिंग शब्दोंके रूप बनाना सीख चुके हैं। अब थोडे ही अभ्याससे नपुंसकलिंग शब्दोंके रूप बनानेका ज्ञान प्राप्त हो सकता है, इसलिये इसकी विधि यहां दी जाती है। अकारान्त नपुंसकलिंग शब्दके रूप निम्नलिखित प्रकारसे होते हैं—

ज्ञानम् शब्दः।

| विभक्ति | एकवचन | द्विवचन | बहुवचन |
|---|---|---|---|
| १ | ज्ञानम् | ज्ञाने | ज्ञानानि |
| सं० | हे ज्ञान | हे ,, | हे ,, |
| २ | ज्ञानम् | ,, | ,, |
| ३ | ज्ञानेन | ज्ञानाभ्याम् | ज्ञानैः |
| ४ | ज्ञानाय | ,, | ज्ञानेभ्यः |
| ५ | ज्ञानात् | ,, | ,, |
| ६ | ज्ञानस्य | ज्ञानयोः | ज्ञानानाम् |
| ७ | ज्ञाने | ,, | ज्ञानेषु |

प्रथमा, संबोधन और द्वितीयाके रूपोंको छोडकर अन्य विभक्तियोंके रूप अकारान्त पुल्लिंग शब्दोंके रूपोंके समान ही होते हैं। यह समानता पाठक अवश्य देखें। इसके जाननेसे नपुंसकलिंग शब्दोंके रूप बनाना बहुत ही सुगम हो जायगा।

®

### मित्र शब्दः ।

| | | | |
|---|---|---|---|
| १ | मित्रं | मित्रे | मित्राणि |
| सं० | हे मित्र | हे ,, | हे ,, |
| २ | मित्रं | ,, | ,, |

शेप रूप अकारान्त पुल्लिंग शब्दोंके रूपोंके समान ही होते हैं, जैसा—

( ३ ) मित्रेण, मित्राभ्यां, मित्रैः । ( ४ ) मित्राय, मित्राभ्यां, मित्रेभ्यः । ( ५ ) मित्रात्, मित्राभ्यां, मित्रेभ्यः । ( ६ ) मित्रस्य, मित्रयोः, मित्राणां । ( ७ ) मित्रे, मित्रयोः, मित्रेषु ।

मित्र, शब्दमें रकार होनेके कारण " मित्राणि, मित्रेण, मित्राणां " इन रूपोंमें नकारको ण हुआ है । इसका नियम तृतीय पाठमें दिया ही है ।

शब्द

| | |
|---|---|
| हृदयं = हृदय | आननं = मुख |
| क्षत्रं = क्षात्रतेज | भेषजं = औषध |
| दारिद्र्यं = दरिद्रता | क्षेत्रं = खेत |
| शरीरं = शरीर | श्रोत्रं = कान |
| नं = मुख | रत्नं = रत्न |
| घ = ,, | वसनं = वस्त्र |
| मुखं - कर्णका भूषण | अंशुकं = ,, |
| कुंडलं = ण | सुवर्णं = सोना |
| कंकणं = कं | |

| | |
|---|---|
| क्षौमं = रेशमका वस्त्र | ताम्रं = तांबा |
| कौशेयं = ,, | चंदनं = चंदन |
| दुकूलं = ,, | सख्यं = मित्रता |
| आसनं = आसन | तर्पणं = तृप्ति |
| ब्राह्मण्यं = ब्राह्मणत्व | चातुर्वर्ण्यं = चार वर्णों-की व्यवस्था |
| कुलं = कुल | |
| वनं = अरण्य | उद्यानं = बाग |
| विपिनं = ,, | यानं = रथ |
| काननं = ,, | वेतनं = तनख्वाह |

इन अकारान्त नपुंसकलिंग शब्दोंके सातों विभक्तियोंके रूप बनाकर आप विविध वाक्य अब बना सकते है—

संस्कृत--वाक्यानि ।

१ मम हृदयं कंपते । २ रामचंद्रस्य क्षत्रं प्रशंसनीयं । ३ तस्य मुखे शोभनं भाषणं भवति । ४ रोगस्य निवारकं औषधं देहि । ५ तस्य क्षेत्रे एकः तडागः अस्ति ।

भाषा--वाक्य ।

१ मेरा हृदय कांपता है । २ रामचंद्रका क्षात्रतेज प्रशंसा-के योग्य है । ३ उसके मुखमें सुन्दर भाषण होता है । ४ रोगका निवारण करनेवाला औषध दे । ५ उसके खेतमें एक तालाब है ।

## संस्कृत-वाक्यानि ।

६ त्वं विविधैः रत्नैः कंठं किं न भूषयसि ? ७ मम कंकणं कौशेयं वस्त्रं च कुत्र रक्षितं इति न स्मरामि । ८ सुवर्णस्य कंकणं भवति । ९ तस्य कंकणानि बहूनि सन्ति । १० सः अनेकानि यानानि गृहीत्वा उद्याने भ्रमति । ११ जनानां हितार्थाय चातुर्वर्ण्यं कृतम् ।

## भाषा-वाक्य ।

६ तू विविध रत्नोंसे कंठको क्यों नहीं भूषित करता है ? ७ मेरा कंकण और रेशमी वस्त्र कहां रखा, यह स्मरण नहीं आता । ८ सोनेका कंकण होता है । ९ उसके पास कंकण बहुत हैं । १० वह अनेक गाडियां लेकर बागमें भ्रमण करता है । ११ लोगोंके हितके लिये चातुर्वर्ण्य किया ।

पाठक इस रीतिसे अनेकानेक छोटे मोटे वाक्य बनावें और शब्दोंका उपयोग करनेका अभ्यास दृढ करें । इतने साधनोंसे पाठक बहुत ही वाक्य बना सकते हैं ।

## संधि किये हुए वाक्य ।

१ त्वं विविधै रत्नैः कण्ठं किं न भूषयसि ?
२ मम कंकणं कौशेयं च वस्त्रं कुत्र रक्षितमिति न स्मरामि ।
३ सोऽनेकानि यानानि गृहीत्वोद्याने भ्रमति ।

## पाठ ११

इस पाठमें इकारान्त नपुंसकलिंग शब्दोंके रूप देखिये

वारि ( जल )

| | | | |
|---|---|---|---|
| १ | वारि | वारिणी | वारीणि |
| सं० | हे वारे, हे वारि ! | हे ,, | हे ,, |
| २ | वारि | ,, | ,, |
| ३ | वारिणा | वारिभ्यां | वारिभिः |
| ४ | वारिणे | ,, | वारिभ्यः |
| ५ | वारिणः | ,, | ,, |
| ६ | ,, | वारिणोः | वारीणाम् |
| ७ | वारिणि | ,, | वारिषु |

इस शब्दके रूपोंके समान इकारान्त नपुंसकलिंग शब्दोंके रूप पाठक बनावें। प्रायः संस्कृतमें विशेषणके-प्रसंगमें इकारान्त नपुंसकलिंग शब्दोंके रूप करनेकी आवश्यकता होती है। क्योंकि स्वतंत्र शब्द बहुत ही थोडे हैं और कई शब्द ऐसे हैं कि जिनके रूप कुछ भिन्नताके साथ हीं बनते हैं।

दधि ( दही )

| | | | |
|---|---|---|---|
| १ | दधि | दधिनी | दधीनि |
| सं० | हे दधे, हे दधि ! | हे दधिनी | हे दधीनि |
| २ | दधि | ,, | ,, |

| | | | |
|---|---|---|---|
| ३ | दध्ना | दधिभ्याम् | दधिभिः |
| ४ | दध्ने | ,, | दधिभ्यः |
| ५ | दध्नः | ,, | दधिभ्यः |
| ६ | दध्नः | दध्नोः | दध्नाम् |
| ७ | दध्नि, दधनि ,, | | दधिषु |

पाठक इसमें एकवचनके रूपोंमें जो विशेष भेद है उसका स्मरण रखें। इसी प्रकार निम्नलिखित शब्दोंके रूप होते हैं।

इकारान्त नपुंसकलिंग शब्द—

| | |
|---|---|
| अस्थि = हड्डी | अक्षि– आंख |
| सक्थि–जांघ | |

सः पुरुषः सक्थ्ना तं ताडयति– वह पुरुष जंघासे उसे ताडन करता है।

अस्थ्ना अस्थि रोहतु– हड्डीसे हड्डी बढे।

जंतुः अक्षिभ्यां पश्यति– प्राणी आंखोंसे देखता है।

सः दध्ना सह ओदनं भक्षयति— वह दहीके साथ चावल खाता है।

अब इस पाठमें पूर्व पाठमें दिये हुए रामायणके वाक्योंके संयुक्त वाक्य बनाकर देते हैं—

राम उवाच, मातः! एवमस्तु। अहमितो वनं गमिष्यामि। राज्ञः प्रतिज्ञामनुपालयन् जटाचीरधरश्च भयामि। इदं तु ज्ञातुमिच्छामि, किमर्थं महीपतिर्यथा-

पूर्वं मामिदानीं नाभिनन्दति। हितेन गुरुणा कृतज्ञेन नृपेण पित्रा नियुज्यमानोऽहं किं प्रियं न कुर्याम् ? एतदेकमेव मे हृदयं दहति यद्राजा मां स्वयमेव भरतस्याभिषेचनं नाऽऽह। तथापि राजानमाश्वासय। दूता गच्छन्तु भरतं मातुलकुलादानयितुम्। एष अहमपि गच्छामि दण्डकारण्यं चतुर्दशसमा वस्तुम्।

एतच्छ्रुत्वा हृष्टा कैकेयी त्वरयामास राघवं प्रस्थानार्थम्। कैकेय्युवाच– व्रीडान्वितो नृपः स्वयं नाभिभाषते त्वाम्। यावत्त्वं न यातोऽसि न तावत्तव पिता स्नास्यते भोक्ष्यतेऽपि।

राजा दशरथ एतद्वचनं श्रुत्वा दीर्घं निःश्वस्य 'धिक्कष्टं' इत्युक्त्वा मूर्च्छितो न्यपतत्। कशया हतो वाजीव रामोऽपि वनं गन्तुं कृतत्वरो बभूव। स राजानमुत्थाप्योवाच।

देवि ! नाहमर्थपरः। मां धर्ममास्थितं विद्धि। पितृशुश्रूषाया महत्तरं किंचिद्धर्माचरणं नास्ति। भवतु मातरमापृच्छे तावत्, सीतां चानुनयामि। ततोऽद्यैव महद्वनं गमिष्यामि। भवत्या तथा कर्तव्यं यथा भरतो राज्यं पालयेत् पितरं च शुश्रूषेत्, नः स एव हि धर्मः।

विसंज्ञस्यापि राज्ञस्तथा कैकेय्या अपि चरणौ रामो निष्पपात। निष्क्रम्य चान्तःपुरात्स्वं सुहृज्जनं च ददर्श। क्रुद्धो लक्ष्मणो बाष्पपूरितलोचनस्तमनुजगाम। तदा माता कौसल्या तमाह– हे राम! राजर्षीणां वृद्धानां धर्मशीलानां कुलोचितं धर्मं कीर्तिमायुश्चाप्नुहि।

पाठक इस पाठको वारंवार पढें और बहुत अभ्यास करें। किसी वाक्यमें कोई कठिनता हुई तो इसी पुस्तकके पाठ ७ में वह वाक्य देखें। वहां पदच्छेदपूर्वक यही वाक्य हैं, उन्हें देखनेसे सब संदेह दूर हो सकते हैं।

संधि किये हुये वाक्य।

१ विसंज्ञस्यापि राज्ञस्तथा कैकेय्या अपि चरणौ रामो निष्पपात। २ रामश्चरणौ कैकेय्यास्तथा विसंज्ञस्य राज्ञोऽपि निष्पपात। ३ निष्पपात रामः कैकेय्याश्चरणौ, तथा विसंज्ञस्य राज्ञोऽपि। ४ निष्क्रम्य चान्तःपुरात्स्वं सुहृज्जनं च ददर्श। ५ ददर्श च स्वं सुहृज्जनमन्तःपुरान्निष्क्रम्य। ६ लक्ष्मणः क्रुद्धो बाष्पपूरितलोचनस्तमनुजगाम। ७ अनुजगाम तं क्रुद्धो लक्ष्मणो बाष्पपूरितलोचनः। ८ बाष्पपूरितलोचनो लक्ष्मणस्तमनुजगाम। ९ तमनुजगाम बाष्पपूरितलोचनो लक्ष्मणः।

## पाठ १२

इस पाठमें उकारान्त नपुंसकलिंग शब्दोंके रूपोंका अभ्यास कीजिये—

मधु शब्दः ।

| | | |
|---|---|---|
| १ मधु | मधुनी | मधूनि |
| सं० हे मधो, हे मधु ! हे ,, | हे ,, | |
| २ मधु | ,, | ,, |
| ३ मधुना | मधुभ्यां | मधुभिः |
| ४ मधुने | ,, | मधुभ्यः |
| ५ मधुनः | ,, | ,, |
| ६ ,, | मधुनोः | मधूनां |
| ७ मधुनि | ,, | मधुषु |

इस प्रकार उकारान्त नपुंसकलिंग शब्दोंके रूप पाठक बना सकते हैं ।

शब्द

| | |
|---|---|
| वस्तु = पदार्थ | अश्रु = आंसु |
| मधु = शहद | दारु = लकड़ी |
| श्मश्रु = डाढी | तालु = तालु |
| जानु = घुटना | जतु = लाख |
| त्रपु = टीन, रांगा, सीसा | सानु = पर्वतशिखर |

इन शब्दोंके रूप बनाकर पूर्वोक्त प्रकारसे वाक्योंमें उनका प्रयोग करनेका अभ्यास कीजिये—

संस्कृत-वाक्यानि ।

१ तत्र तव पेटिकायां कानि वस्तूनि सन्ति ? २ अस्य मधुनः मधुरः गन्धः भवन्ति । ३ सः इदानीं अश्रूणि मोचयति । ४ अत्र दारूणां भवनं त्वया किं न निर्मितं ? ५ त्वं स्वयं एव श्मश्रु मुंडसि न वा ? ६ तव तालुनि का व्यथा अस्ति ? ७ सानूनि गंधः सुगंधीकरोति । ८ इदानीं तव जानुनी कथं स्तः ?

भाषा-वाक्य ।

१ वहां तेरी पेटीमें कौनसे पदार्थ हैं ? २ इस शहदकी मीठी महक होती है । ३ वह अब आंसु छोड रहा है । ४ यहां लकडियोंका घर तूने क्यों नहीं बनाया ? ५ तू स्वयं ही डाढी मुंडता है या नहीं ? ६ तेरे तालुमें क्या व्यथा है ? ७ शिखरोंको सुवास सुगंधित करती है । ८ अब तेरे दोनों घुटने कैसे हैं ?

अब इस पाठमें कुछ श्लोकोंका अर्थ देखिये—

श्लोक

आत्मोपभोगलिप्सार्थं नेयमर्थेप्सुता मम ।
भरणार्थं तु विप्राणां ब्रह्मन्कांक्षे न लोभतः ॥
( म० भा० वन० अ. २।५२ )

अन्वयः– हे ब्रह्मन्! इयं मम अर्थेप्सुता आत्मोपभोगलिप्सार्थं न। विप्राणां भरणार्थं तु कांक्षे, न लोभतः।

संस्कृत-टीका– हे (ब्रह्मन्)! हे ब्राह्मण! इयं मम (अर्थेप्सुता) अर्थस्य धनस्य ईप्सुता इच्छा (आत्मोपभोगलिप्सार्थं) आत्मनः उपभोगः आत्मोपभोगः आत्मोपभोगस्य लिप्सा इच्छा आत्मोपभोगलिप्सा। आत्मोपभोगलिप्सार्थं स्वकीयोपभोगस्य इच्छार्थं न नास्ति। विप्राणां ब्राह्मणानां भरणार्थं पोषणार्थं तु एव कांक्षे इच्छामि। न तु लोभतः, लोभेन न कांक्षे।

अर्थ– हे ब्राह्मण! यह मेरी धनप्राप्तिकी इच्छा अपने भोगके लिये नहीं है। किंतु ब्राह्मणोंके पोषणके लिये ही मैं धनकी इच्छा करता हूं, लोभसे नहीं।

कथमस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे।
भरणं पालनं चापि न कुर्यादनुयायिनाम्।
( म० भारत वन० २।५३ )

अन्वयः— हे ब्रह्मन्! गृहाश्रमे वर्तमानः अस्मद्विधः अनुयायिनां अपि भरणं पालनं च कथं न कुर्यात्?

संस्कृत-टीका– हे ब्रह्मन्! हे विप्र! गृहाश्रमे गृहस्थाश्रमे वर्तमानः वसन् अस्मद्विधः अस्मत्सदृशः

क्षत्रियः अनुयायिनां अनुगामिनां जनानां अपि भरणं पोषणं, पालनं रक्षणं च कथं न कुर्यात् ? अस्मत्सदृशेन क्षत्रियेण अवश्यं कर्तव्यम् इति भावः।

अर्थ—हे ब्राह्मण! गृहस्थाश्रममें रहनेवाले हमारे सदृश क्षत्रियोंसे अपने अनुगामी जनोंका भी पालनपोषण कैसे न किया जावे ?

पाठक इस प्रकार श्लोकोंका पाठ करें। ये श्लोक कंठस्थ करनेयोग्य हैं। अतः श्लोकोंको कंठस्थ करके उनका अर्थ संस्कृतमें ही प्रथम पढनेका यत्न पाठक करें। अन्वय और संस्कृतमें टीका देखनेके पश्चात् भी यदि कोई कठिनता रह जाय, तभी भाषाका अर्थ देखना उचित है। अन्यथा कोई आवश्यकता नहीं है। इससे पाठकोंको संस्कृतके साथ परिचय अधिकाधिक होता जायगा। इसलिये इस सूचनाका विचार पाठक करें और तदनुसार उत्तम अभ्यास करें।

संधि किये हुए वाक्य।

अस्मादृशः क्षत्रियोऽनुयायिनामनुगामिनां जनानामपि भरणं पोषणं पालनं रक्षणं च कथं न कुर्यात्? अस्मत्सदृशेन क्षत्रियेणानुयायिनां पालनं अवश्यं कर्तव्यमिति भावः।

## पाठ १३

इस पाठमें ऋकारान्त नपुंसकलिंग शब्दोंके रूप देखिये—

कर्तृ ( करनेवाला )

| | | | |
|---|---|---|---|
| १ | कर्तृ | कर्तृणी | कर्तृणि |
| सं. | हे कर्तृ | हे " | हे " |
| २ | कर्तृ | " | " |
| ३ | कर्त्रा, कर्तृणा | कर्तृभ्यां | कर्तृभिः |
| ४ | कर्त्रे, कर्तृणे | " | कर्तृभ्यः |
| ५ | कर्तुः, कर्तृणः | " | " |
| ६ | " " | कर्तृणोः | कर्तॄणां |
| ७ | कर्तरि, कर्तृणि | " | कर्तृषु |

इन रूपोंमें पाठक देख सकते हैं कि एकवचनके रूपोंमें एक रूप पुल्लिंग ऋकारान्त शब्दके रूपोंके समान है और दूसरा नपुंसक शब्दके समान है। पाठक इस विशेषताका स्मरण रखें।

"कर्तृ" शब्दका अर्थ "कर्ता, करनेवाला" है, अतः यह विशेषण है। जब इसके रूप पुल्लिंगके कार्यमें प्रयुक्त होंगे तब पुल्लिंग प्रकरणमें दिये हुए रूपोंके समान करने चाहिये; परंतु जहां इसका उपयोग नपुंसकलिंगके शब्दोंके साथ करना हो, वहां नपुंसकलिंगके रूपोंकी रीतिके अनुसार रूप

प्रयुक्त करने चाहिये। इतना नियम इन शब्दोंके उपयोगके समय अवश्य ध्यानमें रखना चाहिये।

शब्द

| | |
|---|---|
| ज्ञातृ = जाननेवाला | गृहीतृ = लेनेवाला |
| कर्तृ = करनेवाला | वक्तृ = बोलनेवाला |
| दातृ = देनेवाला | ईशितृ = स्वामी होनेवाला |
| भोक्तृ = भोगनेवाला | धातृ = धारण करनेवाला |
| नेतृ = चलानेवाला | भवितृ = होनेवाला |

इन शब्दोंके पुल्लिंगके समय पुल्लिंगकी रीतिसे रूप बनाते हैं और नपुंसकलिंगके प्रयोगके समय नपुंसकलिंगकी रीतिसे रूप बनाते हैं।

वाक्य।

ज्ञानं एव सर्वस्य कर्तृ अस्ति–ज्ञान ही सबका कर्ता है।

नेत्रं जन्तोः नेतृ भवति– नेत्र प्राणीका चलानेवाला होता है।

ब्रह्म सर्वस्य ईशितृ अस्ति– ब्रह्म सबका स्वामी है।

इस रीतिसे वाक्य बनानेका अभ्यास पाठक करें। इस प्रकारके प्रयोग थोडे ही होते हैं, इसलिये यहां बहुत वाक्य नहीं दिये। अब कुछ श्लोक दिये जाते हैं—

श्लोकः ।

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥
( म० भारत वन० २।५५ )

अन्वयः— तृणानि भूमिः उदकं, चतुर्थी सूनृता वाक्, एतानि सतां गेहेषु कदाचन न उच्छिद्यन्ते ।

संस्कृतटीका— तृणानि तृणमयानि आसनानि, भूमिः पृथिवीस्थानं, उदकं जलं, चतुर्थी सूनृता सत्या वाक् वाणी, एतानि सतां सज्जनानां गेहेषु गृहेषु कदाचन कदा अपि न उच्छिद्यन्ते छिन्नानि न भवन्ति ।

अर्थ— घासके आसन, भूमि अर्थात् स्थान, जल और सीधा सत्य भाषण ये सज्जनोंके घरोंसे कभी कम नहीं होते । ( अर्थात् अतिथि आनेपर उसकी सेवाके लिये इतने पदार्थ तो अवश्य रहते ही है । )

देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥
( म० भारत वन० २।५६ )

अन्वयः—आर्तस्य शयनं देयं स्थितश्रान्तस्य च आसनं देयं, तृषितस्य च पानीयं, क्षुधितस्य च भोजनम् ।

संस्कृतटीका— आर्तस्य रोगार्तस्य शयनं देयं,

स्थितश्रान्तस्य स्थितः ऊर्ध्वं स्थितः तत्सहितस्य श्रांतस्य च आसनं देयं, तृषितस्य तृषया क्लिष्टस्य पानीयं जलं देयं, क्षुधितस्य च भोजनं दातव्यम्।

अर्थ— रोगीके लिये शय्या, थके मांदेके लिये आसन, प्यासेको जल और भूखेको अन्न देना चाहिये।

अतिथिसत्कार

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्यात्सुभाषिणीम्।
उत्थाय चासनं दद्यादेष धर्मः सनातनः॥
( म० भारत, वन० २।५७ )

अन्वयः— चक्षुः दद्यात्, मनः दद्यात्, सुभाषिणीं वाचं दद्यात्, उत्थाय च आसनं दद्यात्, एषः सनातनः धर्मः।

अर्थ—( अतिथिके अपने घरमें आनेपर उसके लिये ) अपनी आंख देना, मन देना, मीठा भाषण देना, उठकर आसन देना, यह सनातन धर्म है।

अतिथिके कार्यके लिये आंख, मन आदि अपने अवयव अर्पण करने चाहिये, यह तात्पर्य है।

सूचना।

पाठक इन श्लोकोंका अच्छी तरह पाठ करें और अन्वयादिकी ओर भी अच्छी तरह ध्यान दें, ताकि उनके समझनेमें कोई दोष न रहे।

---

## पाठ १४

इस पाठमें निम्नलिखित श्लोकोंका अध्ययन कीजिये—

आत्मार्थं पाचयेन्नान्नं न वृथा घातयेत्पशून् ।
न च तत्स्वयमश्नीयाद्विधिवद्यन्न निर्वपेत् ॥
( म० भारत, वन० २।५९ )

अन्वयः— आत्मार्थं अन्नं न पाचयेत् । पशून् वृथा न घातयेत् । तत् स्वयं न अश्नीयात् यत् विधिवत् न निर्वपेत् ।

संस्कृतटीका— आत्मार्थं आत्मनः स्वस्य अर्थं स्वार्थाय एव अन्नं भोजनादिकं न पाचयेत् न पक्तव्यम् । पशून् चतुष्पदान् वृथा व्यर्थं न ,घातयेत् । तत् अन्नादिकं स्वयं न अश्नीयात् भुंजीयात् यत् विधिवत् विधिं अनुसृत्य न निर्वपेत ॥

अर्थ— अपने लिये ही भोजन नहीं पकाना चाहिये । पशुओंका व्यर्थ हनन करना योग्य नहीं है । वह अन्न स्वयं नहीं खाना चाहिये, जो विधिपूर्वक दिया नहीं जावे ।

श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चाऽऽवपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायं प्रातश्च दीयते ।
( म० भारत, वन० २।६० )

अन्वयः— श्वभ्यः च श्वपचेभ्यः च वयोभ्यः च भुवि आवपेत् । एतत् वैश्वदेवं नाम सायं प्रातः च दीयते ।

संस्कृतटीका— श्वभ्यः श्वानेभ्यः, श्वपचेभ्यः चाण्डालेभ्यः, वयोभ्यः वायसेभ्यः भुवि भूमौ पृथिव्यां आवपेत् निर्वपेत्। एतत् वैश्वदेवनामकं अन्नदानं सायं सायंकाले तथा प्रातःकाले अपि दीयते।

अर्थ— कुत्ते, चांडाल, कौवे आदिके लिये भूमिपर अन्न रखे। यह वैश्वदेव नामक अन्नदान सायंकाल और प्रातःकाल दिया जाता है।

विघसाशो भवेत्तस्मान्नित्यं चामृतभोजनः।
विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम्॥
(म० भा० वन० २।६१)

अन्वयः— तस्मात् नित्यं विघसाशः अमृतभोजनः च भवेत्। भुक्तशेषं तु विघसः, यज्ञशेषं तथा अमृतम्।

संस्कृतटीका— तस्मात् पूर्वोक्तकारणात् एव नित्यं प्रतिदिनं विघसाशः विघसं भुक्तशेषं अन्नं अश्नाति इति विघसाशः तथा जनः अमृतं यज्ञशेषं अन्नं भोजनं यस्य सः अमृतभोजनः भवेत्। भुक्तशेषं सर्वेषां अतिथीनां भोजनानन्तरं यद् अवशिष्टं तत् अन्नं भुक्तशेषं तद् एव भक्षणीयं अथवा यज्ञशेषं यज्ञस्य शिष्टं अवशिष्टं अन्नं तत् अमृतरूपमेव भवति तत् भक्षणीयम्।

अर्थ— इसलिये प्रतिदिन अतिथिभोजनसे बचा हुआ

अन्न तथा यज्ञका प्रसादरूप अन्न ही खाना योग्य है। अतिथिभोजनके पश्चात् जो बचता है, उस अन्नका नाम विघस है और यज्ञका अवशेष जो अन्न है, वह अमृत कहलाता है।

चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥

( म० भारत, वन० २।६२ )

अन्वयः— चक्षुः दद्यात्, मनः दद्यात्, सूनृतां वाचं दद्यात्, अनुव्रजेत्, उपासीत, सः पञ्चदक्षिणः यज्ञः ।

अर्थ— [ अतिथिके लिये ] अपनी आंख दे, मन दे, उत्तम मीठा भाषण दे, उसके पीछे चले, उसके पास बैठे; यह पांच दक्षिणाओंसे युक्त यज्ञ कहलाता है।

एवं यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं परं प्राहुः कथं वा विप्र मन्यसे ॥

( म० भारत, वन० २।६४ )

अन्वयः— यः गृहाश्रमे वर्तमानः एवं वृत्तिं वर्तते, तस्य परं धर्मं प्राहुः । हे विप्र ! कथं वा मन्यसे ?

संस्कृतटीका– यः मनुष्यः गृहाश्रमे गृहस्थाश्रमे वर्तमानः स्थितः एवं ईदृशीं वृत्तिं वर्तते, ईदृशं आचरणं करोति, तस्य मानवस्य धर्मं परं श्रेष्ठं प्राहुः विशेषेण आहुः । हे विप्र ! कथं वा मन्यसे ? तव मतं कीदृक् आस्ति ?

अर्थ— जो गृहस्थाश्रममें रहनेवाला मनुष्य इस प्रकार-का वर्तन करता है, उसका धर्म श्रेष्ठ कहा जाता है। हे ब्राह्मण ! तुम्हारा मत क्या है ?

पाठक इन श्लोकोंका अच्छी तरहसे अभ्यास करें। श्लोक, अन्वय और संस्कृत-टीकाका खूब पठन और मनन करनेसे पाठकोंको बडा लाभ हो सकता है। इतने श्लोक पढनेके बाद पाठकोंकी प्रगति बहुत हो जायगी।

संधि किये हुए वाक्य।

१ रविः प्रातःसमये आगच्छति । आगच्छति प्रातःसमये रविः। रविरागच्छति प्रातःसमये।

२ स तस्योदयकाल इत्युच्यते। तस्योदयकालः स इत्युच्यते। उच्यते स तस्योदयकाल इति। उदय-कालस्तस्य स इत्युच्यते।

३ स सायंकालेऽस्तं गच्छति। अस्तं गच्छति स सायंकाले। सोऽस्तं गच्छति सायंकाले। सायंकालेऽस्तं गच्छति सः। गच्छत्यस्तं स सायंकाले।

४ त्वयोदधिर्दृष्टो न वा ? उदधिर्दृष्टस्त्वया न वा ? दृष्टस्त्वयोदधिर्न वा ? उदधिस्त्वया दृष्टो न वा ?

५ भूपतिर्भूमिं रक्षति। भूमिं रक्षति भूपतिः। रक्षति भूपतिर्भूमिम्।

## पाठ १५

तौ महात्मानौ वरायुधधरौ वीरौ भ्रातरौ रामलक्ष्मणौ दृष्ट्वा सुग्रीवः शङ्कितः अभवत्। ततः भयसंत्रस्तं तं सुग्रीवं हनुमान्वाक्यकोविदः वाक्यं उवाच। एषः वालिकृते महान् संभ्रमः त्यज्यताम्। मलयः अयं गिरिवरः। इह वालिनः भयं नास्ति। सुग्रीवः तु हनुमतः शुभं वाक्यं श्रुत्वा, ततः शुभतरं वाक्यं हनुमन्तं उवाच-एतौ दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ सुरसुतोपमौ दृष्ट्वा कस्य न भयं स्यात्।

---

### सुग्रीवका मिलाप

उन दोनों महात्मा श्रेष्ठ शस्त्रोंको धारण करनेवाले वीर भाई राम और लक्ष्मणको देखकर सुग्रीवको शंका हुई। तब भयसे डरे हुए उस सुग्रीवको वाणी बोलनेमें पंडित हनुमान् वचन बोला-' इस वालीविषयक बडी भारी घबराहटका त्याग करो। यह पर्वतोंमें श्रेष्ठ मलय पर्वत है। यहां वालीका भय नहीं है।' सुग्रीव हनुमान्के शुभ वचनको सुनकर, उससे भी अधिक शुभ वाक्य हनुमान्से बोला। ' लम्बी लम्बी बाहुओंवाले, बडी बडी आंखोंवाले, बाण, धनुष तथा तलवारको धारण करते हुए देवके पुत्रोंके सदृश इन दोनोंको देखकर किसको डर न लगे ?

राजानः हि वहुमित्राः भवन्ति। तस्मात् अत्र विश्वासः न क्षमः। यदि तु एतौ शुद्धात्मानौ, तर्हि जानीहि त्वम्। सुग्रीवस्य महात्मनः वचो निशम्य हनुमान् ऋष्यमूकात् पर्वतात् रामलक्ष्मणौ प्राप्तवान्। मारुतात्मजः हनुमान् ततः कपिरूपं परित्यज्य भिक्षुरूपं भेजे। ततः हनुमान् विनीतवत् उपागम्य राघवौ प्रणिपत्य श्लक्ष्णया सुमनोज्ञया वाचा मृदु वाक्यं उवाच- 'भवन्तौ राजर्षिदेवप्रतिमौ तापसौ वरवर्णिनौ संशितव्रतौ इमं देशं कथं प्राप्तौ? सुग्रीवः नाम धर्मात्मा कश्चित् वीरः वानरपुङ्गवः भ्रात्रा विनिकृतः दुःखितः जगत् भ्रमति। तेन

---

'राजाओंके वहुत मित्र होते हैं। इसलिए इसमें विश्वास करना ठीक नहीं। यदि तो ये दोनों शुद्ध आत्मावाले हैं, तो इनका तू पता कर।' महात्मा सुग्रीवकी बात सुनकर हनुमान् ऋष्यमूक पर्वतसे रामलक्ष्मणको प्राप्त हुआ। पवनके पुत्र हनुमान्ने तब वन्दरके रूपका त्याग करके भिक्षुका रूप धारण किया। तब हनुमान् विनीतकी तरह पास जाकर रामलक्ष्मण को प्रणाम करके चिकनी और सुन्दर वाणीसे कोमल वाक्य बोला- 'राजर्षि देवके सदृश तपस्वी, सुन्दर वर्णवाले, व्रत धारण किये हुए, आप दोनों इस देशमें कैसे आगए? सुग्रीव नामवाला धर्मात्मा, वानरोंमें श्रेष्ठ वीर, भाईद्वारा तिरस्कार किया हुआ

सुग्रीवेण महात्मना प्रेषितः हनुमान् नाम वानरः अहं प्राप्तः। स हि युवाभ्यां सख्यं इच्छति। सुग्रीव-प्रियकारणात् भिक्षुरूपप्रतिच्छन्नं ऋष्यमूकात् इह प्राप्तं मां तस्य सचिवं विद्धि। ' एतत् तस्य वचः श्रुत्वा प्रहृष्टवदनः रामः पार्श्वतः स्थितं भ्रातरं लक्ष्मणं अब्रवीत्। ' अयं कपीन्द्रस्य महात्मनः सुग्रीवस्य सचिवः इह ममान्तिकं आगतः। नून अनेन कृत्स्नं व्याकरणं बहुधा श्रुतं यतः बहु व्याहरता तेन न किञ्चित् अपि अपशब्दितम्। अनया चित्रया वाचा कस्य उद्यतासेः अरेः अपि चित्तं नाराध्यते ? '

---

दुःखित होकर संसारमें घूम रहा है। उस सुग्रीव महात्माद्वारा भेजा हुआ मैं हनुमान् नामवाला वानर आपके पास आया हूं। वह आप दोनोंसे मित्रता करना चाहता है। सुग्रीवके प्रिय करनेके कारणसे भिक्षुके रूपमें छिपे हुए ऋष्यमूकसे यहां आए हुए मुझे उसका मन्त्री जान। ' यह उसका वचन सुनकर प्रसन्नमुख राम एक तरफ पार्श्वमें खडे हुए भाई लक्ष्मणसे बोला-'यह महात्मा कपियोंके स्वामी सुग्रीवका सचिव यहां मेरे पास आया है। निश्चयसे इसने सारा व्याकरण अनेक वार सुना है। क्योंकि बहुत बोलते हुए भी उसने कोई भी अपशब्द नहीं कहा। इस आश्चर्यकारक वाणीसे किस तलवारको ऊठाये हुए शत्रुका भी चित्त प्रसन्न न हो ?

'यस्य पार्थिवस्य एवंविधाः दूताः न भवेयुः, तस्य कार्याणि कथं सिद्ध्येयुः ?' एवं उक्तः वाक्यज्ञः सौमित्रिः वाक्यज्ञं सुग्रीवसचिवं पवनात्मजं अभ्यभाषत-- 'विद्वन्! सुग्रीवस्य गुणाः विदिताः। सुग्रीववचनात् यथा त्वं ब्रवीषि तत्तथा आवां करिष्यावः, ततः परमसंहृष्टः प्लवगोत्तमः हनुमान् वाक्यविशारदं रामं प्रत्युवाच--'पंपामण्डितकाननं नानाव्यालमृगैः युतं घोरं वनं सानुजः श्रीमान् किमर्थं आगतः?' तस्य तद्वचनं श्रुत्वा रामचोदितः लक्ष्मणः आचचक्षे-'द्युतिमान् धर्मवत्सलः दशरथः नाम राजा।'

---

'जिस राजाके इस प्रकारके दूत न हों उसके कार्य कैसे सिद्ध होंगे ? इस प्रकार कहा हुआ, बातको समझनेवाला लक्ष्मण वाक्यको जाननेवाले सुग्रीवके सचिव, पवनके पुत्रसे बोला-' हे विद्वान् ! सुग्रीवके गुण हमने जान लिये। सुग्रीवके कथनसे जैसा तू कहता है वैसा हम करेंगे।' तब अत्यन्त प्रसन्न हुआ वन्दरोंमें श्रेष्ठ हनुमान् वाक्य बोलनेमें होशियार रामसे बोला--'पंपानामक सरोवरसे शोभित, जो नाना सर्प पशु आदियोंसे युक्त है, ऐसे भयंकर वनमें भाईसहित आप क्यों आये हैं ?' उसकी यह बात सुनकर रामसे प्रेरणा किया हुआ लक्ष्मण कहने लगा--'तेजस्वी, धर्म जिसको प्यारा है, ऐसा दशरथ नामका राजा है।'

'तस्य अयं जनैः श्रुतः रामः नाम पूर्वजः पुत्रः। राजलक्षणसंयुक्तः राज्यसंपदा च संयुक्तः राज्यात् भ्रष्टः मया सार्धं, हे महाभाग! सीतया भार्यया अनुगतः वने वस्तुं इह आगतः। अहं गुणैः दास्यं उपागतः अस्य नामतः लक्ष्मणः नाम अवरः भ्राता। अस्य भार्या रक्षसा अपहृता। केन कुत्र हृता इति न ज्ञायते। यस्य सीता स्नुषा आसीत्, यश्च धर्मवत्सलः शरण्यः आसीत्, तस्य शरण्यस्य पुत्रः सुग्रीवं शरणं गच्छति। यस्य प्रसादे सततं इमाः प्रजाः प्रसीदेयुः स रामः वानरेन्द्रस्य प्रसादं अभिकांक्षते।'

---

'उसका यह प्रसिद्ध राम नामका सबसे बडा लडका है। हे बडे भाग्यवाले! राजचिह्नोंसे युक्त होता हुआ और राज्य-संपत्तिसे युक्त होता हुआ यह राज्यसे भ्रष्ट होकर मेरे साथ और सीतानामक अपनी पत्नीके साथ वनमें रहनेके लिए यहां आया है। मैं गुणोंके कारण इसका दास हूं। मैं नामसे लक्ष्मण ऐसा प्रसिद्ध इसका छोटा भाई हूं। इसकी स्त्री राक्षसने हरण कर ली है। कौन कहां हर ले गया, यह ज्ञात नहीं है। जिसकी सीता पुत्रवधू थी और जो धर्मवत्सल सबको शरण देनेवाला था, उस शरण्यका पुत्र आज सुग्रीव की शरणमें जाता है! जिसकी कृपामें निरन्तर ये प्रजाएं प्रसन्न होती हैं, वह राम वानरोंके राजाकी कृपाकी अभि-लाषा करता है!'

एवं करुणं साश्रुपातं ब्रुवाणं सौमित्रिं हनुमान् प्रत्युवाच । 'स हि राज्यात् विभ्रष्टः वालिना कृतवैरः, हृतदारः, भ्रात्रा विनिकृतः, भास्करात्मजः सुग्रीवः अस्माभिः सह सीतायाः परिमार्गणे युवयोः साहाय्यं करिष्यति ।' ततः भिक्षुरूपं परित्यज्य वानरं रूपं आस्थितः तौ वीरौ पृष्ठं आरोप्य कपिकुञ्जरः ऋष्यमूकात् मलयं गिरिं जगाम । तदा च सः कपिराजाय राघवौ वीरौ आचचक्षे । वानराधिपः सुग्रीवः हनुमतो वाक्यं श्रुत्वा दर्शनीयतमो भूत्वा राघवं प्रीत्या उवाच ।

---

इस प्रकार करुणापूर्ण आंसुओंको बहाते हुए बोलते हुए लक्ष्मणको हनुमान् उत्तर देने लगा- 'राज्यसे गिराया हुआ, वालीसे जिसने वैर किया है, जिसकी स्त्री हरी गई है, जो भाईसे निकाला गया है, ऐसा वह सूर्यका पुत्र सुग्रीव हमारे साथ मिलकर सीताकी खोजमें तुम दोनोंकी सहायता करेगा। ' तब भिखारीके रूपका त्याग करके वानरके रूपमें आया हुआ उन दोनों वीरोंको पीठपर बैठाकर वह कपियोंमें श्रेष्ठ ऋष्यमूकसे उस मलय पर्वतको गया। और तब कपिराजसे उन दोनों वीर रामलक्ष्मणके विषयमें कहा। वानरोंका राजा सुग्रीव हनुमान्‌की बात सुनकर अपने आपको देखने योग्य बनाकर रामसे प्रीतिपूर्वक बोला ।

---

## पाठ १६

' यदि मे सख्यं रोचते तर्हि एषः बाहुः प्रसारितः। पाणिना पाणिः गृह्यतां, ध्रुवा मर्यादा च बध्यताम्। ' सुग्रीवस्य एतत् सुभाषितं वचनं श्रुत्वा संप्रहृष्टमना रामः पाणिना हस्तं पीडयामास। ततः तौ दीप्यमानं अग्निं प्रदक्षिणां चक्रतुः। सुग्रीवः राघवः च वयस्यत्वं उपागतौ। सुग्रीवः राघवं उवाच-' त्वं मे हृद्यः वयस्यः असि। नौ एकं दुःखं सुखं च अस्ति। हे राम! सेवकः मन्त्रिसत्तमः अयं ते आख्याति यत् त्वया धीमता लक्ष्मणेन च वियुक्ता रुदती जनकात्मजा रक्षसा अपहृता।'

---

'यदि मेरी दोस्ती अच्छी लगती है तो यह हाथ मैं फैलाता हूं। हाथसे हाथ पकडकर निश्चित सीमाको बांधो, अर्थात् प्रतिज्ञा करो।' सुग्रीवकी इस अच्छी बातको सुनकर प्रसन्नमन राम हाथसे हाथको दवाने लगा। तब उन दोनोंने प्रकाशित अग्निकी प्रदक्षिणा की। सुग्रीव और राम मित्रताको प्राप्त हुए। सुग्रीव रामसे बोला-' तू मेरा अति प्यारा मित्र है, हम दोनोंका सुख दुःख समान है। हे राम! सेवक, मन्त्रियोंमें श्रेष्ठ यह कहता है कि तुझ धीमान तथा लक्ष्मणसे बिछुडी हुई, रोती हुई, जनककी पुत्री राक्षसद्वारा हरी गई है।'

